छत्रातिच्छत्रपालघ्नो मालातृणकरोहिषौ[1] ।
विडंगं क्रिमिजिद्वेल्लं[2] कैरलं चित्रतण्डुलम् ॥ १५ ॥
कैराततण्डुलं चैव जन्तुहृद्रोगतण्डुलम् ।
तालीसपत्रं तालीसं तत्स्यात्तामलकीदलम्[3] ॥ १६ ॥
नाकुली चविका चव्यं गण्डीरं कोलवल्लिका ।
नखः कररुहः शृंगी बदरीपत्रकः खुरः ॥ १७ ॥
अन्यद्व्याघ्रनखं व्यालायुधं[4] स्याच्चक्रकारकम् ।
शुक्तिः शंखनखः[5] कोलहनुर्नागहनुश्च सः ॥ १८ ॥
सर्पाक्षी नाकुली क्षीरी[6] सर्पगन्धा सुगन्धिका ।
अन्या तु सुमही[7] गंधनाकुली नकुलप्रिया ॥ १९ ॥
चित्राक्षी चरणाक्षी च साधकी[8] विषनाशनी ।
सुरसा तु[9] तुलसी कृष्णा कायस्था[10] बहुमंजरी ॥ २० ॥
चक्रपर्णी नागमाता[11] सुरभिर्देवदुन्दुभिः ।
फणिज्जको मञ्जरीकस्तीक्ष्णगन्धः सुगन्धिकः[12] ॥ २१ ॥
पर्णाशो बिल्वगन्धश्च[13] वनपत्रः कुठेरकः ।
कृष्णार्जकः कालमालः करालः कृष्णमल्लिका ॥ २२ ॥
सुमुखो गन्धपुष्पश्च मूलकः कृष्णमूलकः[14] ।
रसोनो लशुनो म्लेच्छगन्धो दीर्घदलश्च सः ॥ २३ ॥

---

१. विलंगं१,२
२. कैरवं१
३. तस्यान्तामलकीदलम्१
४. व्यालनखं२
५. काशो१
६. चीरं २ चेली३
७. सुवहा३, सुमहा१
८. सुरस कृष्णतुलसी१
९. वयस्था३
१०. राजमाता३
११. सुपुत्रकः१
१२. सारकी२
१३. "पर्णिका गन्धविल्वा च ३, गंधविल्वः२
१४ "सुमुखा गन्धपुष्पा च मूलिका कृष्णमूलिका"३

यवनेष्टोऽमृतोद्भूतः पलाण्डुर्मुखदूषणः ।
व्याघ्री निदिग्धिका क्षुद्रा धावनी कण्टकारिका ॥ २४ ॥
दुष्टस्पर्शा[1] कण्टकिनी सिंही तु बहुकण्टका[2] ।
बृहती क्षुद्रवार्ताकी राष्ट्रिका विशदा च सा ॥ २५ ॥
मिशिर्मधूलिका घोषा शतपुष्पा शताह्वया ।
अति[3]च्छत्रा ह्यवाक्पुष्पी कारवी गणिका च सा ॥ २६ ॥
शालेयः[4] स्यात् शीतसहा[5] मिश्रेया[6] दीर्घपर्णिका ।
सोमपर्णी बर्बरिका तिलपर्णी वरा तु सा[8] ॥ २७ ॥
श्वानबर्बरिका पूतिमयूरा पशुगन्धिका[9] ।
बर्बरी शंखपुष्पा च बस्तगंधा मरूद्भवा ॥ २८ ॥
कौण्डिन्य-वैकुण्ठ-महाद्रोणी देवकुतुम्बिका ।
अधिच्छत्रा द्वेष्यमेषा[10] गोतमः पूतिगन्धिका ॥ २९ ॥
कुम्भयोनिर्द्रोणपुष्पी [11]स च ज्ञेयः कुतुम्बकः ।
मूलकं हरिवर्णं[12] च क्षारकं हस्तिदन्तकम् ॥ ३० ॥
चाणक्यं मरुसम्भूजं बालेयं क्षुद्रमूलकम् ।
सालाम[13]कर्कटं विस्रं विष्णुगुप्तफलश्च तत् ॥ ३१ ॥
शोभाञ्जनस्तीक्ष्णगन्धः शिग्रुर्बहलपल्लवः ।
मुरङ्गी मूलकदला गृञ्जनो[14] हरितच्छदः ॥ ३२ ॥

---

१. दुष्प्रदर्षा१ दुष्टधर्षा२ — २. बहुपुत्रिका१,३
३. अधि१,२ — ४. शैलेयः३
५. स्थितिसहा२ — ६. मिश्रेया१
७. तालपत्रिका१, नालपर्णिकः२ — ८. च सा स्मृता१
९. "स्वानपर्णी वर्वरिका मयूरपशुगन्धिका१ — १०. दीप्यरोषा१
११. न च ज्ञेया कुतुम्बरः१, स्तम्बेरमकुतुम्बिका३
१२. हरिपर्ण२,३ — १३. सालोमा३
१४. शिग्रुको रक्तगृंजनो१; मूलकतरुः२

उभयोस्तु तयोर्बीजं मरिचं श्वेतपूर्वकम् ।
आसुरी सर्षपा राजी नासासंवेदनः[1] कटुः ॥ ३३ ॥
सिद्धार्थको भूतनाशो रक्षोघ्नो गौरसर्षपः[2] ।
हपुषा[3] वपुषा[4] विस्रा[5] मुण्डिनी पोटभिक्षुका ॥ ३४ ॥
श्रावणी स्यात्कुलहला वृद्धालम्बुसतापसा[6] ।
महाश्रावणिका त्वन्या भिन्नग्रन्थिनिका च सा[7] ॥ ३५ ॥
पुनर्नवा[8] वर्षकेतुर्वृश्चीवः श्वेतमूलकः ।
वर्षाभूर्दीर्घपत्रश्च विकसस्तु[9] कठिल्लकः[10] ॥ ३६ ॥
सुनाडिको[11] रक्तपुष्पो विशालो मण्डलच्छदः ।
निकुम्भः शिखरी शीघ्रा दन्ती चित्रकपत्रिका[12] ॥ ३७ ॥
नागदन्ती श्वेतकाण्डः पवित्रोदुम्बरच्छदः ।
भद्रदारुर्देवदारुर्दारुः स्यात् कालवत्सकः[13] ॥ ३८ ॥
जरणं[14] जन्तुको हिंगुर्भूतहृद्धस्तिसिंहकम् ।
अगूढगन्धं बाह्लीकं रामठं सूपधूपकम् ॥ ३९ ॥
अजमोदा खराह्वा च यवानी दीप्यकश्च सः ।
शटिपर्णी पलाशा च चोरकः सोमसंभवः ॥ ४० ॥
ग्रन्थिपर्णी च गन्धाह्वा गन्धाली गन्धमूलिका ।

---

१. संदीपनः ( नासिकावेदनः ३ ) २. श्वेतसर्षपः२
३. हबुषा१ ४. विषला१
५. हिस्रा१ ६. लाबुरुषापहा२
७. भिन्नग्रन्थिः पलंकषा१; छिन्नग्रंथिनिकाच सा२
८. इसके पहले पां० १ में :— ९. पिकसस्तु१
"कदम्बपुष्पगोपालःस्थविरो भूतकदम्बकः१"
"श्रावणी शीर्षश्रवणा अरुचिः क्रिमिवाद्रहा१"
१०. करिल्लकः१ ११. निनालिको२ सेनादिको१
१२. श्वित्रकपत्रिका२ १३. कालवत्सलः३ १४. जीरणं१

क्रोधना पिशुना[1] गन्धा चण्डा चौरी च तस्करी ॥ ४१ ॥
कर्चूरी[2] गन्धमूला च द्राविडी[3] दुर्लभा च सा ।
कपिला रेणुका कौन्ती[4] राजपुत्री हरेणुका ॥ ४२ ॥
लताकस्तूरि कक्कोलं तक्कोलं कटुकीफलम् ।
एलापत्रं कृष्णफलं कटुकं बहुबीजकम्[5] ॥ ४३ ॥
जातपत्री जातिकोशः सुमनःपत्रिका च सा ।
जातीफलं मज्जसारं जातिजं मदशौण्डजम्[6] ॥ ४४ ॥
गन्धवेणी[7] देवमुख्या कस्तूरी नाभिजो मदः[8] ।
मृगनाभिर्मृगमदो दर्पः श्वेतमृगाण्डजः ॥ ४५ ॥
शालिजात[9]स्पशा [10]पूतिकोषा गन्धबिडालिका ।
कुन्दरुः स्यात्कुन्दुरुष्को मोदकः [11]कबुरश्च सः ॥ ४६ ॥
हरितालमलं तालं गोदन्तं नटभूषणम् ।
पिण्डालकं विस्रगन्धं पिञ्जरं कनकप्रभम् ॥ ४७ ॥
वैगन्धकं सुगन्धश्च गन्धकं[12] गन्धको[13] बली ।
जातिहिंगुलकं म्लेच्छं दरदं मणिवारिजम् ॥ ४८ ॥
मणिराजोऽतिरक्तश्च तत्स्यात्[14] कर्कटशीर्षकम्[15] ।
मनःशिला मनोगुप्ता मनोह्वा कुनटी शिला ॥ ४९ ॥
नागमाता विगन्धा च नैपाली करवीरकः ।

---

१. पिचुना१
२. कच्चूरी १; कच्छुरी३
३. द्राविणो३, द्रविला कुंभमेदिनी२
४. कान्तिः१
५. बहुमूलकम्१
६ मदशौण्डिकम्२, मण्डशौण्डजम्१
७. गन्धवान्३
८. मतः १
९. जालिकाऽतिस्पृशा३ जातिस्पृशा१
१०. पूतिकोशागन्धविडालिका३
११. कटुकश्च सः३
१२. गम्भीरो३
१३. गन्धनः फलम्२
१४. तचच३
१५. कर्कटश्च सः१

वितुन्नं किटपं[1] तुत्थं खर्परी[2] बर्हिकण्ठकम्[3] ॥ ५० ॥
चक्षुष्यममृतोत्पन्नं तुत्थं खर्परिका च तत् ।
स्फोटशोफक्षयकरं भल्लातकमरुष्करम्[4] ॥ ५१ ॥
अंकोलो गिरिकोलश्च कोलंको[5] दीर्घकोलकः ।
पीतसारस्ताम्रफलो गन्धपुष्पो निचोरकः[6] ॥ ५२ ॥
कृष्णनिम्बः[7] कालशाकः कैडर्यः सुरभिच्छदः ।
पीलुर्गुडफलस्तीक्ष्णवृक्षो[8] गुल्मविनाशनः ॥ ५३ ॥
विरेचनफलस्तीक्ष्णः बलकारी च[9] वल्लभः ।
पुष्पेन्द्रश्चम्पको हेमकुसुमः षट्पदापहः[10] ॥ ५४ ॥
वासन्ती सुकुमारी च नैपाली[11] नवमल्लिका ।
मल्ली विचकिला शीतभीरुः स्यादष्टपत्रिका ॥ ५५ ॥
कुन्दस्तु मकरन्दश्च सदापुष्पी च वल्लभः ।
विषमुष्टिस्तु मुष्टिः स्यात् क्षयाह्वः केशमुष्टिका ॥ ५६ ॥
विश्वरूप्या रूप्यकन्दा[12] कुप्या[13] हरितमञ्जरी ।
सर्पनालः क्रूरकन्दो दार्वी कन्दश्च सूरणः ॥ ५७ ॥
हिंगुपत्री तु कबरी पृथ्विका वाष्पिका पृथुः ।
शुक्लपुष्पी[14] भूमिलग्ना ह्रस्वाङ्गी शंखपुष्पिका ॥ ५८ ॥

---

१. कर्परी३ २. कर्परी ३
३. मयूरग्रीवः सस्यते २ ४. इसके बाद पां० ३ में :—
"श्लेष्मारि रसकं चैव कबरी बहुकण्टकम् ३ ।
५. केबुको २ केजको १ ६. निकोचकः १
७, इसके पहले पां० ३ में:—
"महायमलपत्रका कुन्दारुः कुण्डवद्दारुः कुन्दुरुः कुक्कुटश्च सः३" ।
८. फलकारी च वल्लभः२ ९. फलकः कुलकप्रियः ३
१०. षटपदोऽरि च १ ११. नैमाली २,१ वनमालिका २
१२. रूप्यगन्धा २ १३. रूप्या १,३ १४. शुक्लकन्दा २,३

शृगालकण्ठा[1] वज्राक्षी वज्रवल्ली च शृङ्खला ।
ब्रह्मदण्डी त्ववाक्पुष्पी वाराही स्यादवाङ्मुखी ॥ ५९ ॥
ईश्वरी नागदमनी कापाली[2] सर्पगन्धिका ।
शार्ङ्गेष्टा नेत्रपुष्पी च दीर्घाङ्गी रक्तपुष्पिका[3] ॥ ६० ॥
प्राचीबला[4] नदीकान्ता कामुका[5] रक्तमंजरी ।
दावाग्निः ब्रह्मसोमाल्पदहनाग्नेयकश्च सः ॥ ६१ ॥
रीतिका पित्तला पीतलौहशैवलकश्च सः ।
ब्रह्माम्बु गोऽम्बु गोमूत्रं पाचनं[6] तद्विरेचनम् ॥ ६२ ॥

॥ इत्यभिधानरत्नमालायां पञ्चमः कटुकस्कन्धः ॥



१. शृगालखण्डा १
२. कौमारी ३
३. हस्तिपुष्पिका ३
४. कार्मुका ३ कामुको २
५. प्राचीना वनतिक्ता
६. गोजलं ३

## ६. अथ कषायद्रव्यस्कन्धः

त्रिवृन्मुस्तालोध्रक्रिमिजयुगलं तिन्दुकयुगम्
शमी बिल्वः पथ्याकलितरु[1] समंगा[2] यवफलम्[3] ।
शिखाम्बष्ठाजम्बूत्रयनिचुलकासघ्नवरुण-
प्रपुन्नाटाशोकक्रमुकविकसायासपुरुषाः[4] ॥ १ ॥
कुद्दाल[5] काश्मन्तकसिन्धुपुष्पी-शिरीषवन्दाकवराहकर्ण्यः ।
जयन्तिकाग्रन्थिलशेलुनेमी-श्वेतघ्नसर्ज्जार्जुनकृष्णसाराः[6] ॥ २ ॥
धवचलदलप्लक्ष[7]न्यग्रोधफल्गुसदाफलाः,
बकुलतिलकास्फोटबन्धूकफणसिध्रकाः ।
स्थिरकतुम्बुरुहुङ्काराह्वो हरिप्रिया शल्लकी
वसुकवशिरक्लीबश्यामारिमेदकरीरकाः ॥ ३ ॥
महाबलो मरूद्भवा जपाकुली कुमारिका
बहुप्रजा खरच्छदा शिखण्डिकातिकेसरः[8] ।
सवीर[10] वृक्षकेतकाम्बुपिप्पली च कुण्डली,
सकाल[11] पिण्डितुर्यपिण्डिका[12] च मन्त्रसिद्धिकृत् ॥ ४ ॥
सालः सर्ज्जरसोऽब्जजालमसनः[13] पुण्ड्राह्वयं पद्मकम्
सौराष्ट्री खटिका[14] भ्रकं बहुपुटं श्रीवेष्टकं शाल्मली ।

---

१. शिवा ३ | २. वरा १
३. यवफला १,३ | ४. कसायानवपुषाः २
५. उद्दाल १ | ६. साठा २
७. लाक्षा ३ | ८. वसन ३
९. शिखण्डिकाऽत्तिकेसरः ३ | १०. नवीरवृक्ष ३
११. नकाल ३ | १२. तुण्डिका ३
१३. सुमनः २ | १४. घटिका २

तारं ताम्रकमञ्जनानि गिरिमृत्[1] सिन्दूरकासीसकम्
ताप्यं फेनकमश्मभेदि[2] जलजं वृक्षो महाकन्दकः ॥ ५ ॥

मूलं पल्लवकोशजालकयुगं[3] पुष्पं दलं[4] स्यात् फलम्[5] ।
शाखावल्लरिवल्कबीजमखिलं[6] स्कन्धः कषायक्रमः ॥ ६ ॥

श्यामा मसूरविदला पालिन्दी[7] कालमेषिका ।
अर्धचन्द्रा सुषेणी च मालवी[8] त्रिवृता च सा[9] ॥ ७ ॥
कुम्भस्त्रिभण्डिनी[10] सूत्रा श्यामा कुटरणा त्रिवृत्[11] ।
कुरुविन्दोऽब्दो गाङ्गेयी[12] मुस्ता राजकशेरुका ॥ ८ ॥

कुटन्नटं प्लवं वन्यं वितुन्नं परिपेलवम् ।
शीर्णपर्णं दाशपुरं तथा मुस्तकटङ्कणम्[13] ॥ ९ ॥

घनत्वक् तिल्वको लोध्रस्तिरीटः पट्टिकाह्वयः ।
द्वितीयः शाबरः श्वेतो[14] दीर्घवृन्तोऽक्षिभेषजः ॥ १० ॥

दीप्तिर्लाक्षा द्रुमव्याधिः[15] क्षतघ्नः क्रिमिजं जतु[16] ।
रक्ताफलं[17] कषारङ्गो[18] मातङ्गो शंखिका च[19] सा ॥ ११ ॥

यावकोऽलक्तको यावपादो रक्तः कुसुम्भिका[20] ।

---

१. गिरिमृत् १,२
२. अश्मभेद १,२
३. कोशजालयुगलं २
४. पलाशं १
५. पल्लवम् ३
६. अखिलैः २
७. कालिन्दी २ पालिन्ती १
८. मालती २,३
९. त्रिपुटा च सा १
१०. कुम्भास्त्रिभण्डी ३
११. सरला त्रिपुटा त्रिवृत्ता त्रिवृत् ३
१२. शार्ङ्गीया १ गांगेय २
१३. कटकटङ्कणम् १
१४. जीर्णा १
१५. दमव्याधिः २
१६. क्रिमिजन्तवः २
१७. रक्तालक्तं ३
१८. कषायं स्यात् ३
१९. शंखकाचका १
२०. कुतुम्बिका २

विस्फूर्जनी विकरणी कालस्कन्धा च तिन्दुकी[1] ॥ १२ ॥
नीलसारा च विस्फूर्जी द्वितीया काकतिन्दुकः ।
कुपीलुः[2] स्फूर्जकः काकपीलुः काकेन्दुकश्च सः ॥ १३ ॥
पवित्रपत्रा मांगल्या शमी स्यात् सूक्ष्मपत्रिका ।
बिल्वः शलाटुः शांडिल्यो हृद्यगन्धो[3] महाफलः[4] ॥ १४ ॥
शैलूषः श्रीफलः पीतफलः स्यात्पूतिमारुतः[5] ।
पथ्या जयाभयामोघा विजया पूतना शिवा ॥ १५ ॥
प्राणधा[6] रेचनी[7] श्रेयस्यमृता[8] सा हरीतकी ।
कोरङ्गको मृदुफलो धात्री चामलकी शिवा ॥ १६ ॥
विभीतकः कर्षफलो भूतावासः कलिद्रुमः ।
अक्षो लक्ष्मीविनाशश्च विन्ध्यजातः कलिश्च सः[9] ॥ १७ ॥
धात्र्यामलकी कोरङ्गा वयस्थामृतजा शिवा[10] ।
फलत्रयं तु त्रिफला श्रेष्ठा चैवोत्तमा[11] वरा ॥ १८ ॥
रक्तपादी शमीपत्रा समंगाञ्जलिकारिका ।
नमस्कारी रक्तमूला लज्जा लोहितयष्टिका[12] ॥ १९ ॥
वंशो वेणुर्यवफलः शतपर्वा तृणध्वजः ।
नर्त्तनः[13] कीचको मृत्युबीजत्वक्सारमस्करा[14]ः ॥ २० ॥
बर्हिपर्णी केकिशिखा[15] मयूराह्वशिखा तथा ।

---

१. पीलुस्फुर्जश्शितीसारः कालस्कन्धश्च तिन्दुकः२ तिन्दुकः३
२. कुलकः२
३. पद्मगन्धो३
४. महाबलः १
५. सूतिमारकः ३
६. प्राणदा ३
७. चेतकी १
८. चैव ३
९. वन्ध्याजातफलश्च स ३
१०. यह पं० केवल पां० ३ में ही है।
११. नैवोत्तमा १,२
१२. राज्ञा लोहित १
१३. स्वच्छिन्नः ३
१४. तस्कराः १
१५. क्षितिसंहा ३

भयभूतपिशाचादिनाशनी जयकारिका[1] ॥ २१ ॥
मसूरविदलाम्बष्ठा सहस्रबहुमूलिका ।
जम्बूः सुरभिपत्रा च राजजम्बूर्महाफला ॥ २२ ॥
मधुपर्णी सूक्ष्मफला[2] भैरवी[3] काकजम्बुका ।
तृतीया जलजम्बूः स्यान्नादेयी स्निग्धपल्लवा ॥ २३ ॥
वेतसो निचुलो नम्रो नादेयी दीर्घकोलकः[4] ।
वञ्जुलो गन्धपुष्पश्च जलकामो निकोचकः[5] ॥ २४ ॥
राजवृक्षः पीतपुष्पः[6] कासघ्नः कासमर्दकः[7] ।
वरुणः श्वेतपुष्पः स्यात् तिक्तशाकः कुमारकः ॥ २५ ॥
शेलुद्रुमः पीतपुष्पो[8] वरुणो मारुतापहः ।
एडस्त्वेडगजः क्लीबः पुन्नाटश्चक्रमर्दकः ॥ २६ ॥
प्रपुन्नाटस्तु वरुणो दद्रुघ्नश्चक्रशीर्षकः[9] ।
अशोकः कर्णपूरश्च सुगन्धस्ताम्रपल्लवः[10] ॥ २७ ॥
हेमपुष्पः पीतपुष्पः[11] रक्तकश्चित्रमञ्जरी[12] ।
स्रंसी घोण्टाफलः पूगश्चिक्कणः क्रमुकश्च सः ॥ २८ ॥
मञ्जिष्ठा विकसा रक्ता ताम्रा योजनवल्लिका ।

---

१. यह पं० केवल पां० १ में ही है ।
२. स्वल्पफला १
३. भिदला २
४. दीर्घपल्लवः३
५. तिक्तशाखः कुमारकः१
६. पितृवृक्षः२
७. यह पं० पां० १ में नहीं है ।
८. पीतपत्रो१
९. दद्रुघ्नश्च१
१०. इसके पहले पां० २ में :—
मेषाक्ष्वेलगजो दर्द्रुपुन्नागश्चक्रमर्द्दकः ।
प्रपुन्नाटस्तु वरदो दर्पघ्नः पीतपुष्पकः ॥ २ ॥
११. पीतशाखो१
१२. शोको रक्तकमंजरी१

अरुणा कालमेषी च कालचण्डा वरी[1] च सा ॥ २९ ॥
दुरालभो धन्वयासो यासो दुःस्पर्शकच्छुरा[2] ।
पुन्नागः पुरुषाह्वश्च तुङ्गाख्यो रक्तकेसरः[3] ॥ ३० ॥
चाम्पेयः पत्रिहीनश्च नमेरुर्देववल्लभः ।
कोविदारस्ताम्रपुष्पो महायमलपत्रकः ॥ ३१ ॥
कुद्दालः कुण्डली दारुरुद्दालः कुक्कुटी[4] च सा ।
अश्मन्तकोऽश्मयोनिश्च श्लक्ष्णत्वक् यमलच्छदः ॥ ३२ ॥
मदहेतुः सिन्धुपुष्पी धातकी मदपुष्पिका ।
कुञ्जरा पर्वतीया च सुपुष्पी[5] मद्यवासिनी ॥ ३३ ॥
शिरीषः प्लवको भाण्डः शुक्रद्रुः किंकिणीफलः ।
शुक्लपुष्पः[6] श्यामपर्णो भाण्डीरो मृदुपुष्पकः[7] ॥ ३४ ॥
शैखरी पादपारोहा वन्दाको नीलवल्लिका ।
वृक्षादनी वृक्षरुहा कामवृक्षश्च कामिनी ॥ ३५ ॥
वराहकर्णी बल्या च भूतवल्ल्यश्वगन्धिका[8] ।
जयन्तिका चलामोदा[9] सूक्ष्ममूलापराजिता[10] ॥ ३६ ॥
विकङ्कतः स्रुवतरुः[11] कण्टकी स्वादुकण्टकः[12] ।
श्वासद्रुमः[13] काकतरुर्यज्ञाङ्गो व्याघ्रवल्ल्यपि[14] ॥ ३७ ॥

---

१. करी च सा१
२. कंभरा१
३. रक्तमञ्जरी१
४. कुपुटी च सा२ ।
५. सुपुष्टि२
६. सुपुष्पः२
७. राज्यर्धफलदायिनी१
८. भूतवल्यश्च गन्धिका२
९. मोचा२
१०. २६ श्लोक संख्या से ३६ श्लोक सं० तक के श्लोक पा० ३ में नहीं है ।
११. श्यामतरुः३
१२. स्वादुरोहणः१
१३. श्वान२
१४. व्याघ्रकर्ण्यपि२ व्याघ्रपर्ण्यपि १

शेलुः श्लेष्मान्तको मुक्तपुष्पो[1] ग्रहतरुश्च सः ।
उद्दालो[2] बहुवारोऽपि पिच्छिलो द्विजकुत्सितः[3] ॥ ३८ ॥
तिनिशः स्यन्दनो नेमी रथद्रुः सर्वसाधकः ।
श्वेतघ्नः पूतिशमनो ह्यजकर्णो रथद्रुमः ॥ ३९ ॥
सर्जोऽश्वकर्णः कुलिशः कषायो वीरपत्रकः ।
सस्यसंवरणस्सारो[4] दीर्घपत्रो हयद्रुमः ॥ ४० ॥
नदीसर्जस्तु ककुभो मधुग्रन्थि[5]र्क[6]पुष्पकः ।
जघनच्छदनः[7] पार्थनामा वैरान्तर्कश्च[8] सः ॥ ४१ ॥
तीक्ष्णधूमा महाश्यामा कृष्णसारावसादनी[9] ।
गुरुनाभो[10] भस्मगर्भश्शिंशपा मण्डलच्छदः ॥ ४२ ॥
शुक्लवृक्षो धवो[11] गौरः पाण्डुरः शकुलाक्षकः ।
भारोद्वहो[12] दृढतरुः कषायो मधुकच्छदः[13] ॥ ४३ ॥
पवित्रः पिप्पलो बोधिवृक्षोऽश्वत्थो गजाशनः ।
दीर्घायुः श्यामलश्चैत्यपादपश्चलपत्रकः[14] ॥ ४४ ॥
प्लक्षः कपीतनः शृंगी सुपार्श्वश्चारुदर्शनः ।
वटप्लवो गर्दभाण्डः प्लवंगः पिप्पलच्छदः[15] ॥ ४५ ॥
न्यग्रोधः स्कन्धजः क्षीरद्रुमो रक्तफलो[16] वटः ।
बहुपादः पादरोही यक्षावासो वनस्पतिः ॥ ४६ ॥

---

१. मुक्तापुष्पो२
२. कुर्बुरांगो२ कोविदारो बहुनरः१
३. बीजकुम्भिकः३
४. सारो१
५. हनुर्ग्रन्थिकः ३
६. मधुग्रंथिल २
७. जघन्यचन्दनं १
८. वैकङ्कतश्च ३
९. प्रसारिणी ३ रसादिनी २
१०. सारा २
११. शुक्लवृक्षफला कास ३
१२. बालग्रहः ३
१३. मधुरच्छदः १
१४. शैत्यपादपः १ चैत्रपादश्चलपत्रकः ३
१५. पर्कटीश्च सः २
१६. रक्तपलो २

फल्गु चित्रौषधं काकक्षुद्रा भद्राद्युदुम्बरी[1] ।
औदुम्बरो जन्तुफलो यज्ञयोग्यः सदाफलः ॥ ४७ ॥
सुप्रतिष्ठो हेमदुग्धः पुष्पस्कन्धफलश्च सः ।
विशारदो मद्यगन्धो बकुलः स च केसरः[2] ॥ ४८ ॥
तिलकः पूर्णकः[3] श्रीमान् क्षुरकश्छिन्नपुष्पकः[4] ।
मुखमण्डनको[5] [6]रोचिर्विटश्चित्रो विशेषकः ॥ ४९ ॥
जर्झरं झरको ज्ञेयं मु[7]खर्यास्फोटका च सा ।
बन्धूको बन्धुजीवः स्यात् पर्प्फणो वृकधूमकः[8] ॥ ५० ॥
सिध्रको[9] भूतकश्चित्रसारःस्फूर्जितकश्च[10] सः ।
शाकः शम्बरदारुः[11] स्याद्वरदारुः[12] खरच्छदः ॥ ५१ ॥
महापत्रो महाशाखः स्थिरकश्च हलीमकः[13] ।
पर्यायबकुलाकारैः कषायसदृशैः फलैः[14] ॥ ५२ ॥
पश्चिमार्णवतीरोत्थस्तुम्बुरुर्नाम[15] स द्रुमः ।
रुजाकरो[16] जालवृक्षो[17] हुङ्कारो बहुकण्टकः ॥ ५३ ॥
काली कालश्चार्त्तगलो[18] काकलो भीषणाह्वयः ।
कर्कशो दुष्प्रधर्षश्चः[19] स्वादुपुष्पफलश्च सः ॥ ५४ ॥

---

१. छिद्राभद्राद्युदुम्बरी ३
२. चनकेसरः २
३. स्फूर्जकः २
४. कुरकश्चिह्नपुष्पकः १
५. ऋषिमण्डनको १
६. रेची२
७. मुचुटचा१ मोचम्मा२
८. पर्प्पणो घृतधूपकः३ वृषधूमकः१
९. छिद्रको३ शिद्रको२
१०. सारस्फूर्जातकः
११. सारस्य१ सारश्च२
१२. स्थिरदारु;२ वरदारुकरच्छदः१
१३. गृहद्रुमः३
१४. पर्यायवकुलाकारः कषायः सदृशः फलः २,१
१५. सनकद्रुमः२
१६. रुजाकुरो२,३
१७. जालपुष्पो२
१८. गोल२
१९. दुष्टसंस्पर्शः३

कदम्बः[1] सुरभिर्नीपः[2] कुत्सिताङ्गो हरिप्रिया ।
कादम्बर्यो वृन्तपुष्पः[3] प्रावृष्यः पर्पटच्छदः ॥ ५५ ॥
महाकदम्बो जीर्णघ्नो नदीवञ्जुलनूपुरः[4] ।
शल्लकी[5] सुरभिर्ह्लादी[6] चाश्वमूत्रो गजप्रियः ॥ ५६ ॥
महेरण[7]रसा मोचा गन्धपत्रा च सुव्रता[8] ।
वसुकः कर्णपूरश्च[9] क्षुरकः स्थूल[10]पुष्पकः ॥ ५७ ॥
पाण्डुरोगप्रियः स्थूल[11]स्तथैवेश्वरमल्लिका[12] ।
वशिरः[13] पर्वतीयश्च[14] करम्भो[15] वनपिप्पली ॥ ५८ ॥
प्रसादिन्यम्बुदफलः क्लीबः स्यान्नीलयष्टिका ।
कालश्यामा[16] कृष्णव[17]ल्ली स्निग्धपत्रश्च[18] पूति च[19] ॥ ५९ ॥
कुब्जपुष्पो महानीलः सैव ताम्बूलवल्लिका ।
गोधास्कन्धो[20]ऽरिमेदश्च[21] द्रुममेदोऽहिमारकः[22] ॥ ६० ॥
शाकपुष्पः[23] कटुफलः [24]शुद्धपत्रः करीरकः ।
ग्रन्थिलस्तीक्ष्णसारश्च [25]बर्बुरस्तीक्ष्णकण्टकः ॥ ६१ ॥

---

१. कादम्बरी१ कदम्बी३
२. सुरानीपः१
३. वृतपुष्प२,३
४. सस्यवंजुलनूपुरः१ स एव जलनूपुरः३
५. सुरकी१, नल्लकी२
६. ह्लादिन्यश्वमूत्रः२
७. महारंभ१
८. सश्रवा२ सुरद्रुचा३
९. किण्वमूलश्च१
१०. क्षव१
११. पियश्शूलः३
१२. नवमल्लिका३
१३. वसुकः३
१४. पार्वतीयस्स्यात्१
१५. कारंभो१
१६. काकश्यामा३
१७. नीलवल्ली३
१८. वृन्ता प्रदानिका३
१९. यह पं० पां० २ में नही है।
२०. बोधिस्कन्धो३
२१. अरिभेदः स्याद्३
२२. यमो लोहितमारकः३
२३. शालपुष्पः२
२४. सिद्धपत्रः३
२५. खर्जूरः३

धन्वनो धन्ववृक्षश्च गात्रवृक्षो[1] महाबलः ।
कच्छुरी[2] तीक्ष्णगन्धा[3] च फणिहारी[4] मरूद्भवा[5] ॥ ६२ ॥
दीर्घमूला कषाया च द्राविणी कुम्भभेदिनी ।
आरक्तमूला शेफालिर्यूथिका ताम्रपुष्पिका[6] ॥ ६३ ॥
रुद्रपुष्पा जपापुष्पा म्लायन्ती वनमालिका[7] ।
गोरेखा वृषभश्रेणी गोश्रेणी तलपोटकः ॥ ६४ ॥
शारदी[8] शर्वरी[9] पुष्पा हेमपुष्पी द्विपाकुली[10] ।
कुमारी व्याघ्रचरणा[11] कन्या कर्कोटकी च सा ॥ ६५ ॥
वातङ्गिनी वातकघ्नी राजवातङ्गिनी तथा ।
स्वादुवातङ्गिनी चैव काम्भोजा च बहुप्रजा ॥ ६६ ॥
स्वाघाटः[12] खरपत्राह्वो[13] गोजिह्वा कर्कशच्छदा[14] ।
क्षुरिका[15] भूतवासश्च कुष्ठघ्नो फलपीतकः[16] ॥ ६७ ॥
यूथिका जाल[17] पुष्पी च शिखण्डी पुण्यगन्धिका ।
कुब्जको भद्रकरणो बृहत्पुष्पोऽतिकेसरः[18] ॥ ६८ ॥
सुमुखः[19] तरलस्तिक्तो दधिभुक्तस्तु[20] मंजरी ।

---

१. गोत्रवृक्षः२
२. कर्चूरी२
३. तीक्ष्णसारा३ तीक्ष्णपत्रा२
४. पणिवारि२
५. मधूद्भवा२
६. बालपुष्पिका३
७. हयजीवनमारकाः३
८. चारटी१
९. शवली२
१०. विदाकुली१
११. व्याघ्रजननी३
१२. शाकोटकः२ शाखोटः१
१३. खरवक्राह्वः१
१४. कर्कटश्च सः १ खरच्छदा३
१५. क्षुरिका१
१६. जलवर्धनः३,१ खरच्छदः२
१७. फलपुष्पिश्च२ बालपुष्पिकः स्यात् ३
१८. बृहत्पुष्पा तु केशरी३
१९. सुमुक्तोऽथ रतिःस्यात्तु१ सुमनंताश्च माधवश्च२
२०. दन्तिभुक्तास्तु मंजरी२

वीरवृक्षो वीरवेल्लतरु[1]श्चोत्पन्नसारकः[2] ॥ ६९ ॥
महापत्रः सुगन्धा च स्थिरगन्धासिपत्रिका[3] ।
वर्षपुष्वी केतकी च कृष्णसर्पप्रिया च सा ॥ ७० ॥
शकुलादी[4] मत्स्यगंधा मत्स्यादन्यम्बुपिप्पली ।
कुण्डली मौक्तिकफला चतुष्कण्टकिनी तथा[5] ॥ ७१ ॥
लवणी तीक्ष्णपत्रा च शीतपित्तहरा[6] च सा[7] ।
पिण्डीतकः कालपिण्डी गन्ध[8]पिण्डीतकश्च सः ॥ ७२ ॥
तुर्यपिण्डी[9] कूलफला[10] पूतिका नित्यपुष्पिका ।
मंगलः पुत्रजीवः स्यात् पवित्रो मन्त्रसिद्धिकृत् ॥ ७३ ॥
शालस्तु शालसारश्च राजनिर्यासशीतकौ[11] ।
सर्ज्जाह्वयः सर्ज्जरसो राजरालः करालकः[12] ॥ ७४ ॥
देवधूपो यक्षधूपो बहुधूपोऽग्निवल्लभः[13] ।
पद्मिनी स्यात्पुटकिनी बिसिनी च मृणालिनी[14] ॥ ७५ ॥
पद्मं तामरसं चाब्जं राजीवं सरसीरुहम् ।
सहस्रपत्रं कमलं नलिनं च कुशेशयम् ॥ ७६ ॥
पुण्डरीकं सितं ततु रक्तं कोकनदं स्मृतम् ।

---

१. वेरवेल्लः१ २. पर्णः स्यात् पर्णसारकः३
३. महापत्रो महाशाको सुगन्धा तु सुपत्रिका३
४. शकुलानी३ ५. च सा३
६. श्वासकासहरा मता१
७. इसके बाद पां० १ मे—"कुंडली विरला हिंस्रा तथा गृधहरा च सा ।"
८. तुर्यपिण्डीतकश्च सः१ ९. तुर्यतुण्डी२
१०. कोलफला३ ११. शीतलौ३
१२. रालःकालरसो रजः१ कालसालरसो रसः३
१३. बहुधूपस्तुवल्लभः१ १४. मृणालिका३, मृणालकम्१ ।

सौगन्धिकन्तु कल्हारं हल्लकं रक्तसन्धिकम्[1] ॥ ७७ ॥
नीलमिन्दीवरं नीलोत्पलं कुवलयञ्च तत्[2] ।
शशिप्रियं गदर्भकं कैरवं कुमुदं च तत् ॥ ७८ ॥
नीलोत्पलं[3] तु काकाद्यं ह्रस्वाङ्गम् क्षुद्रमुत्पलम् ।
वल्लीकर्कोटकीकन्दं[4] जालकं वज्रकं फलम् ॥ ७९ ॥
कन्दकं कन्दशालूकम् वज्रकं फलमुच्यते[5] ।
पद्मनालन्तु मृदुलं मृणालं बिसमुच्यते ॥ ८० ॥
किञ्जल्कः केसरस्तु स्यात् परागो मकरन्दकः ।
असनः प्रियकः पीतसारो बन्धूकपुष्पकः ॥ ८१ ॥
महासर्ज्जस्तथा काश्यो बीजकः[6] प्रियसारकः ।
प्रपुण्डरीकं श्रीपुष्पं पुण्ड्राह्वं मन्त्रसाधकम्[7] ॥ ८२ ॥
एकस्तनं चैकमूलं[8] चक्षुष्यं शतपुष्पकम् ।
पद्मको हेमपद्मश्च[9] मलयः पद्मगन्धिकः ॥ ८३ ॥
सौराष्ट्री तुवरी कांक्षी[10] कांची[11] मृत्स्नामृणालकम् ।
मृदुकान्तिर्महाश्वेता श्वेतजा खटिका[12] स्मृता ॥ ८४ ॥
अभ्रकं पर्वतोद्भूतं निर्मलं[13] विमलं स्मृतम् ।
बहुलत्वग् भूर्जपत्रं पत्रछत्रः स्थिरश्च[14] सः ॥ ८५ ॥

---

१. रक्तसन्ध्यकम्२
२. नीलोत्पलं कुवलयं नीलमिन्दीवरं च तत्२ ।
३. काकोत्पलं तु काकाख्यं३    ४. वल्ली कर्कोटकी च सा १,२
५. यह पं० पां० ३ में नहीं है ।    ६. जीवकः२
७. पौण्डरीकं प्रियं पुष्पं पुण्ड्राह्वं मूलकं धनम्२ मूलसाधनम्१ ।
८. चैकमूलं चक्षुष्यं शतपुष्पकम्१    ९. स्यात्२,३
१०. कोश३    ११. कार्षी२
१२. घटिका२    १३. नीरकं३ निर्मुक्तं२
१४. यत्र तत्र स्थितश्च सः२; सीतश्च सः३ ।

भूर्जसारो बहुपुटो मृदुत्वक् वर्णपुष्पकः[1] ।
श्रीवेष्टको वायुसखो[2] द्व्याह्वो रक्तशीर्षकः[3] ॥ ८६ ॥

वृक्षधूपश्च निर्यासः श्रीवासः[4] श्याह्वयोऽपि सः ।
शाल्मली कुक्कुटी मोचा कर्कशा रक्तपुष्पिका ॥ ८७ ॥

शरावपुष्पी याम्यत्वक्[5] पूरणी[6] कण्टकाचिता ।
स्थिरजीवी[7] तूलफला[8] पिच्छिलो मातुलद्रुमः ॥ ८८ ॥

निर्यासः शाल्मलीवेष्टः पिच्छो[9] मोचरसश्च सः ।
रूप्यकं रजतं तारं त्रपु भीरु[10] शताह्वयम् ॥ ८९ ॥

कलधौतं तप्तरूपं रुचिरं[11] चन्द्रहासकम् ।
ताम्रमौदुम्बरं शुल्वं पवित्रं ब्रह्मवर्धनम् ॥ ९० ॥

रक्तलोहं म्लेच्छमुखं त्र्यम्बकं रुधिराह्वयम्[12] ।
रसाञ्जनं तार्क्ष्यशैलं[13] रसतुत्थं रसोद्भवम् ॥ ९१ ॥

दार्वीक्वाथभवं चैव रसाग्र्यं बालभेषजम्[14] ।
सौवीरकन्तु सौवीरं मेचकं[15] नेत्रभूषणम् ॥ ९२ ॥

स्रोतोऽञ्जनं यामुनेयं सौवीरन्तु कपोतकम्[16] ।
पुष्पाञ्जनं पुष्पकेतु रीतिपुष्पं च रीतिजम् ॥ ९३ ॥

---

१. स्वर्णलच्छदः३. स्वर्णकुच्छदः२ २. वायसको३
३. गोरक्तशीर्षकः२ ४. शाल्मली च स३
५. याद्दक्त्वक्२; शारदापुष्परम्यत्वक्३ ६. पुराणी२
७. चिरजीवी३ ८. तुलफला पिचुलो३
९ पिंचा२
१०. त्रपुभि रुधिराह्वयम्३; रुचिराह्वयम्२ ११. रुधिरं३
१२. रुधिराह्वयम्१ १३. साक्ष्यतैलं२
१४. बहुभेषजम्१ १५. सौवीरं१
१६. कापोतकं यामुनेयं स्रोतोंऽजनं हरितं च तत्१ ।

अञ्जनं यामुनं[1] कृष्णं[2] नादेयं मेचकं तथा ।
गिरिमृद् गैरिकं धातु रक्ताश्म रक्तकान्तिकम्[3] ॥ ९४ ॥
सीमन्तमण्डनं रक्तरेणुः[4] सिन्दूरनागजम् ।
कासीसं धातुकासीसं पांशुकासीसमुच्यते ॥ ९५ ॥
अन्यन् मलीमसं पुष्पकासीसं[5] नेत्रभूषणम् ।
तार्प्यं माक्षिकधातुश्च[6] माक्षिकं हेममाक्षिकम्[7] ॥ ९६ ॥
मज्जाम्बुफेनमुदधिमलं सागरफेनजम् ।
पाषाणभेद्युत्पलभिच्छिलाभिदश्मभेदकाः[8] ॥ ९७ ॥
शंखो वारिभवः कम्बुर्जलजो दीर्घनिःस्वनः ।
वृक्षस्तरुर्द्रुमः साक्षी पादपो द्रुमहीरुहः ॥ ९८ ॥
अनोकहा गोविटपी पलाशी च[9] नगः कुजः ।
[10]कालकूटः मदो मुष्को वत्सनाभो हलाहलः ॥ ९९ ॥
वत्सवान्तो महाशृंगी लेलिहा कीलपुत्रकः ।
विषश्च शृङ्गी गरलं गरन्तु विषसंज्ञकम् ॥ १०० ॥
पारदो रसराजश्च[11] रसनाथो[12] महारसः ।
रसश्चैवो महाराजो रसलौहः रसोत्तमः ॥ १०१ ॥
सुतरां चपलो जैत्रः सूतश्चैव शिवस्तथा ।

---

१. यावनं३ २. पौष्पं३
३. रक्तशान्तिकृत्१; रक्तकान्तिकृत्३
४. सीमन्तचन्दनं१; सीमन्तमदनं२; श्रीमन्तमण्डनं३
५. कानीनं२ ६. स्यात्३
७. तापिजं धातुमाक्षिकम्३, इसके बाद पां० २,१ मे :—
"अवर्त्तमणिधातुश्च ताप्यजं धातुमाक्षिकम्
८. ग्रावभेदी३ ९. पलाशजनकः३
१०. यहाँ तीन पं० पां० १,२ में नहीं है ।
११. रसधातुः स्यात् २ १२. रुद्रशुक्लं२

अमृतं च रसेन्द्रश्च लोमशो दर्दरप्रभुः ॥ १०२ ॥
रुद्रजो हरबीजश्च रसधातुः रविप्रभः ।
खेचरश्चामरः प्रोक्तो देहादो मृत्युनाशनः[1] ॥ १०३ ॥
महाकन्दो जटा[2] त्रिश्च कन्दकं कन्दशालुकम्[3] ।
( कन्यदामूलकं शिफा[4] )
पल्लवः स्यात् किसलयं प्रवालं शृङ्गमङ्कुरम् ॥ १०४ ॥
कुड्मलो मुकुलः कोशः क्षारकं[5] जालकं स्मृतम् ।
प्रसूनं कुसुमं पुष्पं सुमनः कुसुमः सुमः[6] ॥ १०५ ॥
पत्रं दलं छदः पर्णं पलाशं छदनं च तत् ।
शिम्बः[7] शमी शलाटुः स्यात् फलं पुष्पोद्भवं स्मृतम् ॥ १०६ ॥
शाखा तु विटपः काण्डः स्कन्धः काण्डसमं स्मृतम् ।
( वल्ली तु व्रततिर्लता )
त्वग्वल्कं वल्कलश्चाथ बीजमस्थीति कथ्यते ॥ १०७ ॥

॥ इत्यभिधानरत्नमालायां षष्ठः कषायस्कन्धः ॥

। ग्रन्थोऽयं समाप्तः ।



---

१. पारदविषयक श्लो० पां० १ में ही है ।
२. द्रुरेभश्च ३ ३. न्यज्जटामूलकन्दकम् ३
४. यह केवल पां० १ में ही है ।
५. क्षारकं जालकं क्लीबे कलिका कोरकः पुमान् १ ।
६. प्रसवार्त्तवम् २, ३ ७. शिम्बी शमीस्यात्पूगं तु २, १

## सम्पादक - परिचयः

विहारगे पाटलिपुत्रमण्डले
खगोलपार्श्वस्थितमुस्तफापुरे ।
सुजन्म सम्प्राप्तमनेकपण्डितैः
यशस्विवैद्यैश्च विमण्डिते कुले ।। १ ।।

विप्रावतंसमगवंशविभूषणोऽसौ
रामावतारविदितो भिषगद्वितीयः ।
धन्वन्तरिप्रतिभटो भुवि राजते स्म
तत्र प्रचण्डयशसा महसा च मित्रः ।। २ ।।

वाग्देवतार्चनप्रियव्रतचञ्चरीकः
रामावतारभिषजस्तनयो द्वितीयः ।
यस्याग्रजोऽस्ति सुजनः सुधियां वदान्यः
सत्यव्रतः सुकविकैरवकाननेन्दुः ।। ३ ।।

श्रीसत्यनारायणशास्त्रिवर्यो
वैद्यश्च राजेश्वरदत्तशास्त्री ।
तयोर्गुरूणां महतां तु गुर्वोः
गीर्भिर्गिरां गौरवमादधानः ।। ४ ।।

साहित्यशास्त्ररसिको भिषजां वरेण्यः
काश्यामधीतसकलोभयवैद्यविद्यः ।
अध्यापयन्ननुसरन्नथ विश्वपूर्वे,
विद्यालये वसति हिन्दुपुरःसरेऽस्मिन् ।। ५ ।।

क्रमेण कालोपहताः निघण्टव-
स्तिरोगताः द्रव्यगुणाकरास्तथा ।
पुना समुद्धर्त्तुमिहैष तान् मुदा,
प्रियं व्रतं धारयति प्रियव्रतः ।। ६ ।।

आशुतोषप्रसादेन जगदम्बानुकम्पया ।
व्रतः सारस्वतोऽयं मे साफल्यं समवाप्नुयात् ।। ७ ।।



# परिशिष्ट

## षड्रसनिघण्टु में वर्णित द्रव्य

### मधुरस्कन्ध

| | | तेलुगु नाम[1] |
|---|---|---|
| १ | घृत | नेय्यि |
| २ | मधु | तेने |
| ३ | तिलतैल | नूने |
| ४ | दुग्ध | पालु |
| ५ | नवनीत | वेन्न |
| ६ | जल | निल्लु |
| ७ | विदारी | नेलगुम्मडि |
| ८ | क्षीरविदारी | पालगुम्मडि |
| ९ | महाशतावरी | पेद्द पीचर |
| १० | शतावरी | पिन्न पीचर |
| ११ | काकोली | काकोली |
| १२ | क्षीरकाकोली | क्षीरकाकोली |
| १३ | महाकपिकच्छू | पेद्द दुलगोवेल |
| १४ | कपिकच्छू | पिन्न दुलगोवेल |
| १५ | सारिवा | गुडपाल |
| १६ | उत्पलसारिवा | मामेना[2] |
| १७ | मेदा-महामेदा | मेध-महामेध |
| १८ | खर्जूरी | खर्जूरम् |
| १९ | जीवन्ती | मनुपाल |
| २० | शृङ्गरीटी ( अर्कपुष्पी ) | कोलपाल |
| २१ | परुषक | पीदु |

१, आन्ध्रटीका में निर्दिष्ट।

२. पा० २ में 'सुगन्धिसारिवा' को एक अतिरिक्त भेद मानकर उसका नाम सुगंधिपाल दिया है।

| | | |
|---|---|---|
| २२ | ताल | ताड्डु |
| २३ | हिन्ताल | श्रीताड्डु |
| २४ | मधूक | इप्प |
| २५ | मधूलिका | पिन्न इप्प |
| २६ | मुद्गपर्णी | कारुपेसरु |
| २७ | माषपर्णी | कारुमिनुमु |
| २८ | शालपर्णी | मुय्याकुपोन्न |
| २९ | पृश्निपर्णी | कोलपोन्न |
| ३० | कुश | रेंदु दर्भलुन्नु |
| ३१ | द्राक्षा | द्राक्ष |
| ३२ | गोस्तनी | गोस्तनी द्राक्ष |
| ३३ | शर | विश्वरेल्लु |
| ३४ | काश | काकिचेरुकु |
| ३५ | सितोपला | शर्करा |
| ३६ | मधुशर्करा | मधुशर्करा |
| ३७ | यवासशर्करा | |
| ३८ | बला | मुत्तषपुलगमु |
| ३९ | अतिबला | कुचबल |
| ४० | महाबला | महाबल |
| ४१ | नागबला | जिबिलिक |
| ४२ | नीलदूर्वा | नल्लदूर्वमु |
| ४३ | श्वेतदूर्वा | तेल्लदूर्वमु |
| ४४ | महादूर्वा | महादूर्वमु |
| ४५ | गोक्षुर | पल्लेरु |
| ४६ | नारिकेल | नारिकेलमु |
| ४७ | अक्षोट | अक्षोलमु |
| ४८ | राजादन | पालमानु |
| ४९ | सुषवी | आरुदोंगे |
| ५० | प्रियाल | मोरली |
| ५१ | इक्षु | चेरुकु |
| ५२ | पारेवत | पारेवतम् |
| ५३ | त्वक्क्षीरी | तवक्षीरी |

| | | |
|---|---|---|
| ५४ | पनस | पनस, वेरुपनस |
| ५५ | वृद्धि | वृद्धि |
| ५६ | कद्ली | अरटि |
| ५७ | जीवक | जीवकमु |
| ५८ | ऋषभक | ऋषभकमु |
| ५९ | तण्डुलीय | चिर्रि |
| ६० | पद्मा | नेलतामर |
| ६१ | मस्तकमञ्जरी | गुरुगु |
| ६२ | इक्षुरक | गोरिमिडि |
| ६३ | नलिका | तूंटि |
| ६४ | खट्वा | कट्लेतीग |
| ६५ | द्रवन्ती | एलुकचेवि |
| ६६ | उत्कटा | जीलुगु |
| ६७ | सहदेवा | सहदेवी |
| ६८ | सुनिषण्णक | चिंचलमु, नीरुचेंचलि |
| ६९ | उपोद्की | बच्चलि |
| ७० | नल | किक्कन |
| ७१ | मधूक | यष्टिमधुकमु |
| ७२ | लक्ष्मणा | लक्ष्मिपंजि |
| ७३ | शूलिनी | गोल्लजिड्डु |
| ७४ | कार्पासी | पत्ति |
| ७५ | पत्तूर | पोन्नगंटि |
| ७६ | अगस्त्य | अगश |
| ७७ | वास्तुक | चक्रवर्तमु |
| ७८ | यवासक | पायितीग |
| ७९ | विष्णुक्रान्ता | बिष्णुक्रान्तमु |
| ८० | जीवन्तिका | कोयिकूर |
| ८१ | वत्साद्नी | दूयतीग |
| ८२ | कशेरुक | नेम्मटगड्डु |
| ८३ | भूमिकन्द ( छत्रक ) | पुट्टकोक्कु |
| ८४ | शृङ्गाटक | तुन्दिलमु, छुंपगड्डु |
| ८५ | स्थौणेयक | स्थौणेयकमु |

| | | |
|---|---|---|
| ८६ | कूष्माण्ड | गुम्मडि |
| ८७ | त्रपुस | दोस |
| ८८ | कलिङ्ग | पुच्च |
| ८९ | कर्कारुक | मुलुदोस |
| ९० | अलाबु | आनुगमु |
| ९१ | धामार्गव | बीर |
| ९२ | कर्कोटकी | पेद्द बीर |
| ९३ | सिक्थ | मैनमु |
| ९४ | स्वर्ण | बंगारमु |
| ९५ | शालि | एर्र राजनालु |
| ९६ | नीवार | निव्वरि वड्लु |
| ९७ | प्रियंगु | कोर्रलु |
| ९८ | श्यामाक | चामलु |
| ९९ | कोरदूष | आल्लु |
| १०० | जूर्ण | जोन्नलु |
| १०१ | गोधूम | गोधूमलु |
| १०२ | यव | यवलु |
| १०३ | मुद्ग | पच्चिपेसलु |
| १०४ | मसूर | नल्लपेसलु |
| १०५ | माष | मिनिमुलु |
| १०६ | हरेणु ( चणक ) | सेनगलु |
| १०७ | कुलत्थ | उलवलु |
| १०८ | निष्पाव | अनुमुलु |
| १०९ | राजमाष | अलसंदलु |
| ११० | आढकी | कन्दुलु |
| १११ | चक्षुष्या | अडवि उलवलु |
| ११२ | तिल | नुव्वुलु |

## अम्लस्कन्ध

| | | |
|---|---|---|
| १ | तक्र | यल्ल |
| २ | दधि | पेरुगु |
| ३ | मस्तु | पेरुगुमीदि नील्लु |

| | | |
|---|---|---|
| ४ | काञ्जी | कलि |
| ५ | धान्याम्ल | कड्गु |
| ६ | शुक्त | मेड्डुद |
| ७ | तुषोद्क | पसिकड्ग |
| ८ | मदिरा | मद्यमु |
| ९ | किण्व | पेल्लेमु |
| १० | अम्लवेतस | पुल्लप्रब्बिलि, आम्लवेतसमु |
| ११ | कुशाम्ल | कोंडमामिडि |
| १२ | तिन्तिडी | चिन्त |
| १३ | दाडिम | दानिम्म |
| १४ | आमलक | उशिरक |
| १५ | रक्तपूरक ( तिन्तिडीक ) | तिन्तिडीकमु, चिन्तपेड्डु |
| १६ | आम्र | मामिडि |
| १७ | आम्रातक | अंबालमु, पुल्लमामडिन्नि |
| १८ | कपित्थ | वेलग |
| १९ | चुक्रिका | पुलिचिंचलमु |
| २० | करमर्द | पोंक, ओकलिवे |
| २१ | अम्लपुष्पा ( करमर्दी ) | कलिवे |
| २२ | अम्लिका | पुलिमिरिन्द् |
| २३ | भव्य | कम्मरेंगु |
| २४ | कोल | रेंगु |
| २५ | बीजपूर | मादीफलम् |
| २६ | जम्बीर | निम्म |
| २७ | ऐरावत | ईड |
| २८ | नारंग | कंचे ईड |
| २९ | लोह | इनुमु |
| ३० | वर्त्तलोह | वर्त्तलोहमु |
| ३१ | मण्डूर | चिट्टमु |

लवणस्कन्ध

| | | |
|---|---|---|
| १ | सैन्धव | सैन्धवलवणमु |
| २ | रुचक | सौवर्चलवणमु |

| | |
|---|---|
| ३ बिड | बिडालवणमु |
| ४ पांशुज | चौट उप्पु |
| ५ औद्भिद | अट्टुप्पु |
| ६ सामुद्र | समुद्रमु उप्पु |
| ७ यवक्षार | यवक्षारमु |
| ८ स्वर्जिक्षार | सज्जक्षारमु |
| ९ टंकण | वेलिगारमु |
| १० सीस | सीसमु, सत्तु |
| ११ वंग | तगरमु |

## तिक्तस्कन्ध

| | |
|---|---|
| १ वासा | अड्डुसरमु |
| २ कुष्ठ | कोष्ठ |
| ३ पटोल | चेति पोट्ल |
| ४ पर्पट | पर्पाटकमु |
| ५ अतिविषा | अतिवस |
| ६ प्रतिविषा | एर्र अतिवस |
| ७ पाठा | चिरुबोद्दि |
| ८ गुडूची | तिप्पतीग |
| ९ रोहिणी ( श्वेतखदिर ) | सोमिमानु, सोमिदपु चेट्टु, वेलिचंड्र |
| १० खदिर | चंड्र |
| ११ कदर | उड्रुसा |
| १२ उशीर | वट्टिवेरु |
| १३ ह्रीबेर | कुरुवेरु |
| १४ कटुका | कटुकरोहिणी |
| १५ मूर्वा | चाग |
| १६ हरिद्रा | पसुपु |
| १७ दारुहरिद्रा | मानु पसुपु |
| १८ मोरटा | चेंगोणिदि |
| १९ भूनिम्ब | नेलवुमु |
| २० अरलु | पेद्दमानु |
| २१ निम्ब | वेमु |

| | | |
|---|---|---|
| २२ | पुष्करमूल | पुष्करमूलमु |
| २३ | अग्निमन्थ | तक्केल, तक्किलि चेट्टु |
| २४ | क्षुद्राग्निमन्थ | नेल्लि, कूटनेल्लि |
| २५ | स्नुही | ब्रह्म चेमुड्डु |
| २६ | वज्रवृक्ष | कोलचेमुड्डु |
| २७ | दलस्नुही | आकुचेमुड्डु |
| २८ | कर्कटशृंगी | ककटिशृंगी |
| २९ | पाटलि | कलिगोट्टि |
| ३० | काश्मरी | पेग्गुम्मुड्डु |
| ३१ | कुबेराक्षी | गच्च |
| ३२ | श्योनाक | दुंदिलमु |
| ३३ | भार्ङ्गी | बारंगी |
| ३४ | मदनफल | मंग चेट्टु |
| ३५ | इक्ष्वाकु | चेति आनुगमुनु |
| ३६ | जीमूत | डाकुर डंगि |
| ३७ | बिम्बी | दोंड |
| ३८ | शणपुष्पी | जनुमु |
| ३९ | कुटज | कोडिश |
| ४० | इन्द्रयव | कोडिशे वित्तुन्नु |
| ४१ | धान्यक | कोद्मल्लु, धनियालु |
| ४२ | कृतवेधन | चेतिबीर, आवड़ |
| ४३ | इन्द्रवारुणी | पापर |
| ४४ | एरण्ड | आमुदमु |
| ४५ | रक्त एरण्ड | पेरामुदमु |
| ४६ | आरग्वध | रेल |
| ४७ | वचा | वस |
| ४८ | सहचर | गोरिंट |
| ४९ | रास्ना | रास्न |
| ५० | त्रायमाणा | कारुगच्च. कलुगानुग |
| ५१ | अजशृङ्गी | ओहि |
| ५२ | नीलिनी | नीलि |

| | | |
|---|---|---|
| ५३ | चण्डालिका | पिन्न नीलि |
| ५४ | वाकुची | बावेचि |
| ५५ | दमनक | दवनमु |
| ५६ | मरुबक | मरुवमु |
| ५७ | कंकुष्ठ | कंकुष्ठमु |
| ५८ | मण्डूकपर्णी | मंडूकब्रह्मी |
| ५९ | ब्राह्मी | संबरेणि |
| ६० | पार्था ( सूर्यकान्ता ) | आदित्यभक्त, प्रोद्दु तिरुगुडु |
| ६१ | प्रियंगु | प्रेंकणमु |
| ६२ | भृङ्गराज | कलगर |
| ६३ | ज्योतिष्मती | ज्योतिष्मती, मेरु पुतीग |
| ६४ | अपामार्ग | उत्तरेणि |
| ६५ | कर्णिकार | गोगु, कोंडगोगु |
| ६६ | पत्तंग | कुचन्दनमु |
| ६७ | कालेयक | श्रीगन्धस्वच्छ |
| ६८ | चन्दन | श्रीचन्दनमु, श्वेतचन्दनमु |
| ६९ | गन्धसार | पञ्चगन्धमु |
| ७० | रक्तचन्दन | रक्तचन्दनमु |
| ७१ | कुङ्कुम | कुङ्कुमपुव्वू |
| ७२ | कर्पूर | कर्पूरमु |
| ७३ | मांसी | जटामांसि |
| ७४ | तुरुष्क | तुरुष्कमु |
| ७५ | गोरोचना | गोरोचनमु |
| ७६ | अगुरु | अगरु |
| ७७ | कृष्णागरु | कृष्णागरु |
| ७८ | नन्दीवृक्ष | नन्दिवृक्षमु |
| ७९ | स्पृक्का | पिक्कचेट्टु |
| ८० | तगर | ग्रथितगरमु |
| ८१ | बोल | बोलमु |
| ८२ | सरल | सरल देवदारु |
| ८३ | शैलेय | रावुब्बू, रातिपुब्बू |

| | | |
|---|---|---|
| ८४ | गुग्गुलु | महिसाक्षी, गुग्गुलमु |
| ८५ | शिलाजतु | शिलाधातुवु, शिलाजित्तु |
| ८६ | वृश्चिकाली | तेलुमणि |
| ८७ | कम्पिल्लक | कंपिल्लकमु |
| ८८ | अर्क, राजार्क | जिल्लेड्डु |
| ८९ | कतक | चिल्लगिंज |
| ९० | लांगली | चेन्न चेरुकु, वेन्न वेदुरु |
| ९१ | धत्तूर | उम्मेत्त |
| ९२ | मोहिनी ( कृष्णधत्तूर ) | नल्ल उम्मेत्त |
| ९३ | विजया | गंजायि |
| ९४ | एलवालुक | कूतरु बुडम |
| ९५ | उर्वारुक | बुडम |
| ९६ | करवीर | गन्नेरु |
| ९७ | काकमाची | काचो, कासरानुन्नु |
| ९८ | गुञ्जा | गुरिगिंज |
| ९९ | श्वेतगुंजा | तेल्ल गुरिगिंज |
| १०० | कृष्णगुंजा | नल्ल गुरिगिंज |
| १०१ | तामलकी | नेल उशिरिक |
| १०२ | गिरिकर्णिका | दिट्टेन |
| १०३ | नील गिरिकर्णिका | नल्ल दिट्टेन |
| १०४ | पलाश | मोदुगु |
| १०५ | सप्तपर्ण | एडाकुल पोन्न |
| १०६ | गोपघोण्टा | गोट्टेचेट्टु |
| १०७ | हिंस्रा | नल्ल उप्पि |
| १०८ | वाराही | नेल ताटि |
| १०९ | हंसपदी | हंसपादि |
| ११० | जाती | जाजि |
| १११ | मुष्कक | मोक्कमु |
| ११२ | सिन्धुवार | तेल्ल वाविलि |
| ११३ | निर्गुण्डी | नल्ल वावलि |
| ११४ | करञ्ज ( नक्तमाल ) | कानुगु |

| | | |
|---|---|---|
| ११५ | पूतीक | नेमलु चेट्टु |
| ११६ | शार्ङ्गेष्टा | गुरिय |
| ११७ | अतसी | एर्र अगस |
| ११८ | तुम्बुरु | तुंबुरुलु |
| ११९ | चर्मरंगा | नुलितङ |
| १२० | इंगुदी | गार चेट्टु |
| १२१ | वेत्र | बेत्तमु, प्रेमु |
| १२२ | शंखिनी | गडलीय, मेट्टतामरा नुन्नु |
| १२३ | जिंगिणी | गिलिगिञ्च |
| १२४ | आदारी | कोरिंद |
| १२५ | आरामशीतला | गोडसाल, मूर्कोंडा नुन्नु |
| १२६ | क्षवक-राजक्षवक | नेरवेंद, तुम्मिन्नि |
| १२७ | झरसी | चेतलासि |
| १२८ | काकजंघा | वेलुमसन्धि |
| १२९ | शरपुंखा | वेप्पलि |
| १३० | बस्तान्त्री | गाडिद गडयर |
| १३१ | वृद्धदारु | मुषिडि |
| १३२ | कटभी ( महाश्वेता ) | पेद्द गिनिय |
| १३३ | किणिही ( क्षुद्रश्वेता ) | गिनिय |
| १३४ | उपानहा ( काकाण्ड ) | चेप्पु तट्ट |
| १३५ | प्रसारणी | गोतिम गोरु |
| १३६ | पारिभद्र | वारिजमु |
| १३७ | शुकनासा | चिन्नुक नान्नुक |
| १३८ | वटपर्णी | कुक्कपाल |
| १३९ | करभी | इलिविंद |
| १४० | वायसी | आंगाकर |
| १४१ | कारवल्ली | काकर |
| १४२ | रामा ( तरुणी ) | नुरुगुड्डु |
| १४३ | पञ्चांगुली | लिंगपोटल, वेक्कुड्डु |
| १४४ | उत्तमवारुणी | दुट्टुवु |
| १४५ | तिल्वक | तिलक्कमु |
| १४६ | कांस्यक | कं |

## कटुस्कन्ध

| | | |
|---|---|---|
| १ | एला | पिन्न एलकुलु |
| २ | स्थूलैला | पेद्द एलकुलु |
| ३ | पत्र | आकुपत्ति |
| ४ | त्वक् | लवंगपुचक्क |
| ५ | नागकेशर | नागकेसरालु |
| ६ | लवंग | लवंगदु पुब्बु |
| ७ | जीरक | जीलकर्र |
| ८ | कृष्णजीरक | नल्ल जीलकर्र |
| ९ | उपकुञ्चिका | |
| १० | शुण्ठी | सोंठि |
| ११ | आर्द्रक | अल्लमु |
| १२ | पिप्पली | पिप्पल्लु |
| १३ | मरिच | मिरिचालु |
| १४ | त्रिकटु | त्रिकटुकमु |
| १५ | गजपिप्पली | गजपिप्पलु |
| १६ | चित्रक | चित्रमूलमु |
| १७ | पिप्पलीमूल | पिप्पलि वेरु |
| १८ | ध्यामक | ध्यामकमु |
| १९ | रोहिष | कामंचिपूरि, गोड्डुगुगड्डि |
| २० | बिडंग | विलंगसारालु |
| २१ | तालीश | तालीसपत्रि |
| २२ | चव्य | चव्यमु |
| २३ | नख | नखमु |
| २४ | व्याघ्रनख | व्याघ्रनखमु |
| २५ | सर्पाक्षी ( नाकुली ) | सर्पाक्षी |
| २६ | गन्धनाकुली | सर्पाक्षीभेदमु |
| २७ | सुरसा ( कृष्णतुलसी ) | कृष्णतुलसी |
| २८ | सुरभि | तुलसी |
| २९ | फणिज्जक | गग्गेर |
| ३० | कुठेरक | गग्गेर |

| | | |
|---|---|---|
| ३१ | कालमाल | नल्लगग्गेर |
| ३२ | सुमुख | |
| ३३ | लशुन | वेल्लुल्लि |
| ३४ | पलाण्डु | नीरुल्लि |
| ३५ | कण्टकारी | वाकुडु, नेल मुलक |
| ३६ | बृहती | मुलक |
| ३७ | शतपुष्पा | सदापलु |
| ३८ | मिश्रेया | अडविसदापलु |
| ३९ | बर्बरिक ( तिलपर्णी ) | बाविंट |
| ४० | बर्बरिका ( अजगंधा ) | कुक्कबाविंट |
| ४१ | द्रोणपुष्पी | तुम्मि |
| ४२ | देवकुतुम्बक | देवतुम्मि |
| ४३ | पूतिगन्धक | एनिकतुम्मि |
| ४४ | मूलक | पेद्द मुल्लंगि |
| ४५ | चाणक्यमूलक | पिन्न मुल्लंगि |
| ४६ | शिग्रु | मुनग |
| ४७ | रक्तशिग्रु | कारु मुनग |
| ४८ | श्वेतमरिच | मुनग वित्तुल्लु |
| ४९ | राजिका | आवालु |
| ५० | श्रावणी | बोडतरमु |
| ५१ | महाश्रावणी | पेद्द बोडतरमु |
| ५२ | पुनर्नवा | गलिजेरु |
| ५३ | वर्षाभू | एर्र गलिजेरु |
| ५४ | रक्तपुनर्नवा | जडलिक, अरिकमामिडि |
| ५५ | दन्ती | दन्ति |
| ५६ | नागदन्ती | नागदन्ति |
| ५७ | देवदारु | देवदारु |
| ५८ | हिंगु | इंगुव |
| ५९ | अजमोदा | अजमोयमु, ओमम् |
| ६० | शटी | कचोरमु |
| ६१ | चण्डा | कोंडवेंड |
| ६२ | कर्चूरी | कप्पुरपु वेंड |

| | | |
|---|---|---|
| ६३ | हरेणुका | रेणुकलु |
| ६४ | कंकोल | तक्कोलपुट्लु |
| ६५ | एलापत्र | एलापत्रमु |
| ६६ | जातिपत्री | जापत्रि |
| ६७ | जातीफल | जाजिकाय |
| ६८ | कस्तूरी | कस्तूरि |
| ६९ | पूति | पिल्लि गड्डु, पुनुगु पट्टमु |
| ७० | कुन्दुरु | कुन्दुरुष्कमु |
| ७१ | हरिताल | हरिदलमु |
| ७२ | गन्धक | गन्धकमु |
| ७३ | हिंगुल | इङ्गिलीकमु |
| ७४ | मनःशिला | मणिशिल |
| ७५ | तुत्थ | कर्परी, मैलुतुत्थमु |
| ७६ | भल्लातक | जीडि |
| ७७ | अंकोल | ऊडुगु |
| ७८ | कैडर्य | करिवेमु |
| ७९ | पीलु | वरगोगु |
| ८० | चम्पक | संपेंग |
| ८१ | वासन्ती | विरजाजि |
| ८२ | मल्ली | मल्ले |
| ८३ | कुन्द | मोल्ले |
| ८४ | विषमुष्टि | मुशिंडि |
| ८५ | हरितमंजरी | कुप्पि, कुप्पेंट |
| ८६ | सूरण | अडविकन्द |
| ८७ | बाष्पिका | हिंगुपत्री |
| ८८ | शंखपुष्पी | शंखपुष्पी, एर्र पिशिनका नुन्नु |
| ८९ | वज्रवल्ली | नल्लेरु |
| ९० | ब्रह्मदण्डी | ब्रह्मदंडि |
| ९१ | ईश्वरी | ईश्वरि |
| ९२ | शार्ङ्गेष्टा | कासर |
| ९३ | प्राचीबला | मरारि मोग्गलु, पिप्पलिकामु |
| ९४ | दावाग्नि | अग्निज्वाल |

| | |
|---|---|
| ६५ रीति | इत्तडि |
| ६६ ब्रह्माम्बु ( गोमूत्रम् ) | गोमूत्रमु |

## कषायस्कन्ध

| | |
|---|---|
| १ श्यामा | नल्ल तेगड |
| २ त्रिवृत् | तेल्ल तेगड |
| ३ मुस्ता | मुस्तलु |
| ४ प्लव | नागरमुस्तलु |
| ५ लोध्र | लोद्दुगु |
| ६ शाबर लोध्र | तेल्ल लोद्दुगु |
| ७ लाक्षा | लक्क |
| ८ अलक्तक | लत्तिक |
| ९ तिन्दुक | तुम्मिक |
| १० काकतिन्दुक | पिन्न तुम्मिक, काकि तुमिकि |
| ११ शमी | जम्मि |
| १२ बिल्व | मारेडु |
| १३ हरीतकी | करक |
| १४ बिभीतक | ताडि |
| १५ आमलकी | उसिरिक |
| १६ त्रिफला | त्रिफल |
| १७ समंगा ( लज्जालु ) | मुड्गु तामर |
| १८ वंश | वेदुरु |
| १९ मयूरशिखा | मयूरशिख |
| २० अम्बष्ठा | कडमु |
| २१ राजजम्बू | अल्ल नेरेडु |
| २२ जलजम्बू | नीरुनेरेडु |
| २३ काकजम्बू | पिन्न नेरेडु |
| २४ निचुल | प्रब्ब |
| २५ कासमर्द | कसिवेंक |
| २६ वरुण | उलिमिडि |
| २७ चक्रमर्द | तगरिश |
| २८ अशोक | अशोकमु |

| | | |
|---|---|---|
| २९ | क्रमुक ( पूग ) | पोक |
| ३० | मञ्जिष्ठा | मंजिष्ठि |
| ३१ | यवास | रेगडिदूल, दूलगोविल |
| ३२ | पुन्नाग | पोन्न |
| ३३ | सुरपुन्नाग | सुरपोन्न |
| ३४ | कोविदार | देवकाञ्चनमु |
| ३५ | अश्मन्तक | आरे |
| ३६ | धातकी | आरे पुब्बु |
| ३७ | शिरीष | दिरिशनमु |
| ३८ | वन्दाक | वदनिक |
| ३९ | अश्वगन्धा | पेन्नेरु |
| ४० | जयन्तिका | सोमेदं |
| ४१ | विकंकत | मुलुवेलुम |
| ४२ | श्लेष्मातक | विरिगि |
| ४३ | तिनिश | नेम्मि |
| ४४ | अजकर्ण | नलमद्दि |
| ४५ | अश्वकर्ण ( सर्ज ) | इनुमद्दि, तेल्ल मद्दि |
| ४६ | अर्जुन | एरुमद्दि |
| ४७ | शिंशपा | विरिगुड्डु, इरिवुड्डु |
| ४८ | धव | वेलुम |
| ४९ | अश्वत्थ | रावि |
| ५० | प्लक्ष | जुव्वि |
| ५१ | न्यग्रोध | मर्रि |
| ५२ | फल्गु | ब्रह्ममेडि, शम्म मेडि |
| ५३ | उदुम्बर | मेडि |
| ५४ | बकुल | पोगड |
| ५५ | तिलक | तिल्वकमु |
| ५६ | आस्फोट | वेरुमल्ले |
| ५७ | बन्धूक | मंकेन |
| ५८ | पप्फण | पापट |
| ५९ | सिध्रक | बिल्लु |

| | | |
|---|---|---|
| ६० | शाक | टेकु |
| ६१ | तुम्बुरु ( तुवरक ) | तुंबुरुलु, तुंबुरुचेट्टु |
| ६२ | आर्त्तगल | आरुदोंड |
| ६३ | कदम्ब | कणमु |
| ६४ | जलकदम्ब | नीरु कणमु |
| ६५ | शल्लकी | अंदुगु |
| ६६ | वसुक | मोदेन |
| ६७ | वशिर | वनपिप्पलि |
| ६८ | क्लीब | मोलुगु |
| ६९ | कालश्यामा | नल्ल तीग |
| ७० | अरिमेद | तुम्म |
| ७१ | करीर | तेल्ल तुम्म, बोब्बरि |
| ७२ | धन्वन | तड चेट्टु |
| ७३ | कच्छुरी | तीग तुमिडि |
| ७४ | जपा | दासनमु |
| ७५ | आकुली | तंगेडु |
| ७६ | कुमारी | कलुबन्द |
| ७७ | बहुप्रजा ( वातंगिनी ) | पुलुगुडु |
| ७८ | गोजिह्वा | बरॆंक शरिवॆंक |
| ७९ | यूथिका | नन्द्यावर्त्तमु |
| ८० | कुब्जक | कुब्जकमु |
| ८१ | वीरतरु | वेणुतुरु |
| ८२ | केतक | मोगिलि |
| ८३ | जलपिप्पली | बोक्केन, नीरुपिप्पलिन्नि |
| ८४ | कुण्डली | तेल्ल उप्पि |
| ८५ | पिण्डीतक | वेलिकि |
| ८६ | तुर्यपिण्डीतक | कोंमन गोलिमिडि |
| ८७ | पुत्रजीवक | पुत्रजीवमु |
| ८८ | शाल | एपि |
| ८९ | सर्जरस | सज्जरसमु |
| ९० | पद्मिनी | तामर तीग |

| | | |
|---|---|---|
| ६१ | पङ्क | तामर |
| ६२ | पुण्डरीक | तेल्ल तामर |
| ६३ | कोकनद | केंतामर |
| ६४ | सौगन्धिक | चेंगलुम |
| ६५ | नीलोत्पल | नल्ल गलुव |
| ६६ | कुमुद | तोग, तेल्ल गलुव |
| ६७ | काकोत्पल | काकि कलुव |
| ६८ | जालक | अल्लि तीग, अल्लि दुंप |
| ६६ | फल | अल्लिकाय |
| १०० | मृणाल | तामरतूडु |
| १०१ | केशर | पद्मकेसरमु |
| १०२ | पराग | पुप्पोडि |
| १०३ | अलन | वेंगि |
| १०४ | पुण्ड्राह्व | प्रपुंडरीकमु |
| १०५ | पद्मक | पद्मकमु |
| १०६ | सौराष्ट्री | सौराष्ट्रिकमु |
| १०७ | खटिका | बलपमु, तोगरिपन्नु |
| १०८ | अभ्रक | अभ्रकमु |
| १०६ | भूर्ज | भुजपत्रमु |
| ११० | श्रीवेष्टक | श्रीवेष्टकमु |
| १११ | शाल्मली | बूरुगु |
| ११२ | मोचरस | बुरुगुवंक |
| ११३ | रजत | वेंडि |
| ११४ | ताम्र | रागि |
| ११५ | रसाञ्जन | रसाञ्जनमु |
| ११६ | सौवीराञ्जन | सौवीराञ्जनमु |
| ११७ | स्रोतोञ्जन | स्रोतोंजनमु |
| ११८ | पुष्पाञ्जन | पुष्पांजनमु |
| ११६ | कृष्णाञ्जन | नीलाञ्जनमु |
| १२० | गैरिक | जाजु |
| १२१ | सिन्दूर | चेंदिरमु, सिंदूरमु |

| | | |
|---|---|---|
| १२२ | कासीस | कासीसमु |
| १२३ | माक्षिक | माक्षिकमु |
| १२४ | समुद्रफेन | समुद्रपुनुरुगु |
| १२५ | पाषाणभेद | पाषाणभेदी |
| १२६ | शंख | शंखमु |
| १२७ | वत्सनाभ | वसनाभु |
| १२८ | पारद | पादरसमु |



# द्रव्यानुक्रमणी

## INDEX OF DRUGS

